कन्येयं सहसा समं परिकरैर्मोहं ग्रसन्ती भज-
त्यन्तर्धानमुपैति चैष पुरुषः श्रीमान् प्रबोधोदयः ॥ २८ ॥

(ततः प्रविशति प्रबोधचन्द्रः ।)

**प्रबोधचन्द्रः —**

किं व्याप्तं किमपोहितं किमुदितं किं वा समुत्सारितं
स्यूतं किं नु विलायितं नु किमिदं किञ्चिन्न वा किञ्चन ।

---

उपनिषत्प्रसादान्मनःसकाशान्मनःप्रसादादुत्पद्यमानबोधेद्धा बुद्धिवृत्तिरियं कन्येत्युच्यते । सा सहसैव स्वोत्पत्तिमात्रेण परिकरैः कार्यवर्गैः सह मोहं ग्रसन्ती विनाशयन्ती स्वनिमित्तभिदामपि सलिलविलोलितकतकरजोवत् स्वयमेव ग्रसन्ती भजत्यन्तर्धानं विलयं वहतीत्यर्थः । पुनरपि किं कृत्वेति, तदाह — निर्भिद्येति । प्रत्यग्र इत्यभिनव उच्यते । अभिनवस्फुटत् । उत्कटं दृढतरम् । इदं क्रियाविशेषणम् । झटितिरुत्थद्दृढास्थि यथा भवति तथा । मनसो वक्षःस्थलम् । मनःशब्देन हृदयमुच्यते । हृदयग्रन्थिं निर्भिद्येत्यर्थः । पुनरपि कीदृशी सेत्याशङ्कायां विशिनष्टि — उद्दामेत्यादिना । उद्दामैरुत्कटैः स्वयंप्रकाशचैतन्यद्युतिसन्दोहैः । दिश इत्युपलक्षणं, "ब्रह्मैवेदं सर्वम्" इत्येवमाकारेण अखण्डब्रह्म प्रकाशयन्तीत्यर्थः । एवं तावत्

"तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।
अविद्या सह कार्येण नासीदस्ति भविष्यति ॥"

इति न्यायाद् बोधेद्धा ब्रह्माकारबोधवृत्तिलक्षणा कन्या स्वविरोध्यज्ञानं तत्कार्यं च निरस्य स्वयमपि ब्रह्मभूयं प्राप्तेत्यभाणि । अधुना तु बुद्धिवृत्तिफलकारूढचैतन्यलक्षणफलस्वरूपं दर्शयति — उपैति चैष पुरुष इत्यादिना ॥ २८ ॥

अथ फलप्रवृत्तिप्रकारमेवावेदयति — ततः प्रविशति प्रबोधचन्द्र इत्यादिना । अशेषानर्थनिरासकत्वाद् निरतिशयानन्दाविर्भावकत्वाच्च चन्द्रवत् प्रबोधचन्द्रः ॥

---

१. 'शादु' क. ग. पाठः. २. 'स्वोदयमा' क. पाठः. ३. 'यं घटती' ग., 'यं व्यादधती' क. पाठः. ४. 'वं समन्ततः इ' ख. घ. पाठः. ५. 'क्यार्थस' घ. पाठः. ६. 'धल' ख. घ. पाठः.

यस्मिन्नभ्युदिते वितर्कपदवीं नैवं समारोहति
त्रैलोक्यं सहजप्रकाशदलितं सोऽहं प्रबोधोदयः ॥ २९॥

(परिक्रम्य) एष पुरुषः । यावदुपसर्पामि । (उपसृत्य) भगवन्! प्रबोधचन्द्रोऽहमभिवादये ।

**पुरुषः** — (साह्लादम्) एहि पुत्र! परिष्वजस्व माम् ।

**प्रबोधचन्द्रः** — (तथा करोति ।)

**पुरुषः** — (आलिङ्ग्य सानन्दम्) अहो! विघटिततिमिरपटलं संजातम् । तथाहि —

मोहान्धकारमवधूय विकल्पनिद्रा-
मुन्मथ्य कोऽप्यजनि बोधतुषाररश्मिः ।

**किं व्याप्तं** किं विषयीकृतम् । किमपोहितं किमपहस्तितम् । किमुदितं किमुत्पन्नम् । किं वा समुत्सारितं किं वा विनाशितम् । स्यूतं किं नु अनुगतं किं नु । विलायितं किं विलयं प्राप्तं किम् । किमिदं परिदृश्यमानं कीदृक्षम् । किंचित् किमस्ति । न वा किंचन किं वा नास्ति किञ्चिदपि । इत्येवमादि विचिकित्सासरणिं न प्राप्नोति । त्रैलोक्यं प्रपञ्चः । यस्मिन् मयि सम्यग्ज्ञाने समुत्पन्ने सोऽहं फलरूपः प्रबोधचन्द्र इत्यर्थः ॥ २९ ॥

**अहो विघटिततिमिरपटलमिति** । विष्णुभक्तिप्रसादाद् निवृत्ताशेषानर्थनिरतिशयानन्दं ब्रह्मैवाहमासमित्यर्थः ।

तदेव दर्शयति — **मोहान्धकारमित्यादिना** । मोह एवान्धकारो मोहान्धकारः, तम् । अवधूय अपहाय । विकल्पः संशयः । वस्त्वेनिर्णयरूपत्वान्निद्रावन्निद्रा ताम् । उन्मथ्य उन्मूल्य । कोऽपीत्यवाङ्मनसगोचरः । अजनि सञ्जातः । बोधतुषाररश्मिः सम्यग्ज्ञानहिम·

---

१. 'न्द्रोदयः इ', २. 'स्तुनिर्णयारूप' ख. घ. पाठः.